॥ श्रीः ॥

# भूमिका

अये गीर्वाणवाग्वल्लिललितालवालकल्पा अनल्पादरकीर्त्यादिकमननीयगुणगणार्णवा विद्याविन्दवः ! सर्वं हि वक्तव्यं च श्रोतव्यं च शब्दाधीनमेव धर्मावगमोऽपि शब्दायत्त एव किंबहुना लौकिको वैदिको वा कोऽपि व्यवहारः शब्दं विना न निर्वहति, उक्तं चाभियुक्तैः—

"न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते ।
अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते ॥" इति ।

शब्दः किं च कथं च बोधयतीति शब्दखण्डेन निरूप्यते । शब्दे...
...स्य श्रीयुतगदाधरभट्टाचार्येण ...
...मपि खण्डितमेवोपलभ्यते इति हृदयखेदः ।

अस्य च व्युत्पत्तिवादस्य ये खलु मया मूलार्था विद्यागुरुभ्यो महामहोपाध्याय सी. आई. ई. श्री ७ ...ङ्गाधरशास्त्रिचरणेभ्योऽणुमात्रमवगतास्तान् स्वकीयज्ञानरक्षार्थं संकलय्याऽऽसमाप्ति मूलार्थोपपाद... ...न्तरानुपलब्ध्या साऽऽदर्शसमाख्येयं व्याख्या केवलं मूलार्थजिज्ञासूनां छात्राणामुपयोगार्थं प्रका...त । अत्र च प्रथमाकारके क्वचित्क्वचित्कृष्णभट्टकृतटीकापि निक्षिप्तास्तीति तत्र तत्र स्पष्टमेव । ...ष्यासमाप्ति यथामति प्राक्तनलिखितानेकपुस्तकसाहाय्येन संशोधित इति प्रायः प्रीतिकरः ...नां भविष्यति ।

...लोके ह्यस्य सन्दर्भस्य प्रायः प्रथमाकारकपर्यन्त एवावलोकनव्यवहारोऽस्ति यद्यपि च तावन्मा... प्रज्ञावतां व्युत्पत्तिप्राप्त्यर्थमलमेव तथाप्यग्रेतनोऽपि भागो द्रष्टव्य एवास्ति, मन्येऽनयैवोपेक्षया ...त्पत्तिवादयोरन्त्यभागौ विनष्टौ, उपलभ्यमानावपि क्लेशेनैव संशोध्यौ विशेयार्थौ च जातावि... ...त्र प्रेक्षावत्सु सविस्तरनिवेदनेनेति विरमन्

४३
५८

५० "न चाज्ञातीत्र कर्तव्यं दोषदृष्टिपरं मनः ।
५१ दोषो ह्यविद्यमानोऽपि तच्चित्तानां प्रकाशते ॥"
५२ इत्यादीन्यत्र वाक्यानि चिन्तनीयानि कोविदैः ।
शुद्धं यदत्र तद् ग्राह्यं दुष्टं चास्तु ममैव मे ॥

५५ इति विज्ञापयति—

५६

श्रीमतीयः पञ्चनदीयः

**सुदर्शनाचार्यः**

काशी

# विशेषव्युत्पत्तीनां संग्रहः



अभेदान्वयबोधश्च विरूपोपस्थितयोरेवेति व्युत्पत्तिः ... ... ... ...
भेदान्वयबोधश्च प्रातिपदिकार्थधात्वर्थयोः प्रत्ययार्थेन क्वचिन्निपातार्थेन सममेव जायते इति नञा व्यासज्यवृत्तिधर्मावच्छिन्नप्रतियोगिताकभेदश्चोद्देश्यतावच्छेदकावच्छेदेनैव बोध्यते इति व्युत्पत्तिः ... ... ... ... ... ....
आख्यातोपस्थापितद्वित्वादिकं चोभयादिरूपान्वयितावच्छेदकावच्छिन्ने एवान्वेतीति व्युत्पत्तिः
व्यासज्यवृत्तिधर्मो यत्रान्वयितावच्छेदकस्तत्र यावत्स्वन्वयितावच्छेदकस्य पर्याप्तिस्तावतामेव पदार्थान्तरेणान्वयः इति व्युत्पत्तिः ... .... ... ... ...
द्वित्वाद्यवच्छिन्नोद्देश्यताकबुद्धावुद्देश्यतावच्छेदकव्यापकता नियमतो विधेयसंसर्गे भासते इति व्युत्पत्तिः ... ... ... ... ... ....
व्यासज्यवृत्तिधर्मावच्छिन्नोद्देश्यताकशाब्दबुद्धौ स्वव्याप्यतादृशधर्मवत्त्वमपि विधेयसंसर्गतया भासते इति व्युत्पत्तिः ... .... ... ... ... ...
एकत्र विशेषणतयोपस्थितस्यान्यत्र विशेषणतयाऽन्वयोऽव्युत्पन्न इति व्युत्पत्तिः ...
पदार्थः पदार्थेनान्वेति न तु पदार्थैकदेशेन इति व्युत्पत्तिः .... ... ...
प्रतियोगिपदादन्यत् यदन्यत् कारकादपि, इति व्युत्पत्तिः .... ... ...
गृह्णाति वाचकः संख्यां प्रकृतेर्विकृतेर्न हीति व्युत्पत्तिः ... ... ...
कर्मत्वान्तरविशेष्यतापन्नकृत्यादौ कर्मत्वस्य संसर्गतया भानमव्युत्पन्नमिति व्युत्पत्तिः ...
उपलक्षणीभूतधर्मावच्छिन्ने न नञर्थाभावान्वय इति व्युत्पत्तिः ... ... ...
प्रकृत्यर्थसुबर्थयोरन्तरा नञर्थातिरिक्तभानस्य व्युत्पत्तिविरुद्धत्वादिति व्युत्पत्तिः ...
आख्यातार्थवर्तमानत्वादेर्नञ्समभिव्याहारस्थलेऽभावांशे एवान्वयस्य व्युत्पन्नत्वादिति ...
उद्देश्यतावच्छेदकावच्छेदेन विधेयान्वयस्य व्युत्पत्तिसिद्धत्वादिति... ... ...
नञर्थे प्रतियोगितयैवाऽऽधेयत्वातिरिक्तविभक्त्यर्थान्वयस्य व्युत्पन्नत्वादिति ... ...
पदार्थैकदेशे इव वृत्त्येकदेशे ससंबन्धिके प्रतियोगिसंबन्धान्वयस्य व्युत्पत्तिसिद्धत्वादिति ...
संख्यातिरिक्तविभक्त्यर्थस्य प्रकृत्यर्थविशेष्यतयैव भानमिति व्युत्पत्तिः ... ( अनेकत्र )
एकपदोपस्थितयोर्द्वयोस्तत्प्रकृतिकविभक्त्यर्थे एकस्य विशेषणतयाऽपरस्य तदविशेषणतयेत्यादि
आश्रयातिरिक्ताविशेषणतापन्नकर्तृत्वविशेषणतानापन्नक्रियायामेव विशेषणतया कर्तृत्वं तृतीयया बोध्यते इति व्युत्पत्तिः ... ... ... ... ...
नामार्थधात्वर्थयोर्भेदेन साक्षादन्वयस्याव्युत्पन्नत्वादिति व्युत्पत्तिः... ... ...
धातोः कर्मतादिसंबन्धेन क्रियान्वयावोधकत्वमिति व्युत्पत्तिः ... .... ...
नञः सुबर्थप्रतियोगिकस्वार्थाभावान्वितक्रियाकर्तृत्वाभावबोधकत्वं नेति ... ...
वृत्तिशब्दैकदेशे इतरानन्वयनियमः ... ... ... ... ...
लडादिस्थले ( कर्त्राख्यातस्थले ) आख्यातार्थकृतेः क्रियाविशेष्यतयैव भानं भवतीति ...
सामान्यविधेर्विशेषेतरपरत्वं व्युत्पत्तिसिद्धमिति ... ... ... ...
कथं चिद्बाधकापनयसंभवे नौत्सर्गिकार्थपरित्याग इति ... ... ...

# विषयानुक्रमणिका


| विषयाः | पृ० |
|---|---|
| अभेदः ... ... ... .... | ३ |
| समानविभक्तिवचनकत्वे ... ... | ४ |
| अभेदान्वयाकाङ्क्षाविचारः ... ... | १३ |
| विशेषणविभक्त्यर्थविचारः ... ... | १७ |
| अभेदस्वरूपम् ... ... ... | २६ |
| क्रियाविशेषणानामभेदान्वयाकाङ्क्षास्वरूपम् ... ... ... ... | ३१ |
| अभेदान्वयनियामकम् ... ... | ४० |
| घटोघट इतिविवादः ... ... | ४० |
| अभेदान्वयविचारः ... ... | ५६ |
| अभेदान्वयानुगमः ... ... | ६२ |
| भेदान्वयबोधविचारारम्भः ... ... | ६७ |
| रूपकालङ्कारवार्ता ... ... ... | ७० |
| राजा पुरुषः ... ... ... | ७२ |
| तण्डुलंपचतीति ... ... ... | ८७ |
| षष्ठ्यर्थः ... ... ... ... | ८९ |
| लुप्तविभक्तिस्मरणम् ... ... | १०१ |
| ऋद्धस्य राजमातङ्गाः ... ... | १०२ |
| पचति चैत्र इति ... ... ... | १०८ |
| चैत्रो जानाति ... ... ... | १०८ |
| भूतले न घटः, नञ् च ... ... | ११८ |
| प्रत्ययप्रत्ययार्थयोर्विचारः ... ... | १२३ |
| एकवचनादिविचारः ... ... | १२३ |
| संख्यावाचकविचारः ... ... | १२६ |
| प्राग्युपसर्गार्थविचारः .... .... | १३६ |
| संख्यासंबन्धविचारः ... ... ... | १३६ |
| पदार्थान्तरान्वयविचारः ... .... | १५८ |
| संख्यान्वयविचारः ... ... ... | १७१ |
| दशशतादिशब्दविचारः .... ... | १७३ |
| नित्यबहुवचनान्तशब्दविचारः .... | १७७ |
| आख्यातस्य संख्यार्थताविचारः ... | १७९ |

| विषयाः | पृ० |
|---|---|
| द्वितीयातृतीयाप्रयोजकसिद्धान्तः .... | १९४ |
| आख्यातद्विवचनादेः संख्याबोधकत्वम् ... | २०२ |
| संख्यान्वयबोधकारणम् ... ... | २०३ |
| गुणादिवाचकपदोत्तरविभक्त्यर्थविचारः | २०५ |
| प्रथमाकारकसमाप्तिः ... ... | २०६ |
| **द्वितीयकारकारम्भः** | २०७ |
| द्वितीयार्थधात्वर्थयोर्निरूपणारम्भः ... | २०७ |
| नव्यमतेन धात्वर्थः ... ... | २१५ |
| धात्वर्थद्वितीयार्थयोर्नव्यप्राचीनमतयोः समीक्षा ... ... ... | २२० |
| कर्माख्यातार्थनिरूपणम् ... ... | २३० |
| हुधात्वर्थः ... ... ... ... | २३४ |
| दाधात्वर्थः, प्रतिग्रहार्थः ... ... | २४० |
| पचधात्वर्थः ... ... ... | २४० |
| भुजधात्वर्थः ... ... ... | २४१ |
| सकर्मकधात्वर्थविचारोपसंहारः ... | २४१ |
| द्विकर्मकधातुसमभिव्याहृतद्वितीयाया अर्थः | २४१ |
| दुहधात्वर्थः ... ... | २४२।२४३ |
| याचधात्वर्थः ... ... ... | २४६ |
| रुणद्ध्यर्थः पृच्छत्यर्थश्च ... ... | २४९ |
| नयत्यर्थो वहत्यर्थः ... ... | २५१ |
| निरूपयत्यर्थः .... ... ... | २५३ |
| ण्यन्तधातुप्रयोगविशेषाः ... ... | २५४ |
| णिजर्थः ... ... ... ... | २५९ |
| यगन्तप्रयोगः ... ... ... | २६० |
| भावाख्यातप्रयोगः ... ... ... | २६५ |
| ' त्वं गच्छति ' इत्यादिवारणम् ... | २६६ |
| सविषयकार्थकज्ञादिधात्वर्थः ... | २७२ |
| घ्राधात्वर्थस्तत्रत्यवादश्च ... ... | २७५ |
| ' आकाशं न पश्यति ' इति ... | २८० |

# विषयानुक्रमणिका


| विषयाः | पृ० |
|---|---|
| द्वितीयखण्डारम्भः | |
| अनुमित्यर्थकधातुः ... ... | २९५ |
| घटत्वेन वह्निर्नास्ति ... .... | २९५ |
| रजतत्वेन शुक्तिं जानाति ... ... ... | २९६ |
| लोहितवह्निं जानाति ... ... ... | २९६ |
| आरोपविषयवाचकसमानवचनत्वमाख्यातस्य | ३०३ |
| इच्छार्थकधातुप्रयोगः ... ... ... | ३०८ |
| सन्नन्तप्रयोगाः ... ... ... ... | ३०८ |
| नामधातुप्रकरणम् ... ... ... | ३१० |
| कृत्यर्थकधातुप्रयोगाः ... ... ... | ३२५ |
| कर्मप्रभेदनिरूपणम् ... ... ... | ३३४ |
| अधिशीङ्स्थासांप्रयोगाः ... ... | ३३७ |
| कालाध्वनोरत्यन्तसंयोगे इत्यस्य प्रयोगाः | ३४७ |
| अत्यन्तसंयोगरूपाभिव्याप्तिविचारः ... | ३५० |
| विनापदसमभिव्याहृतद्वितीयार्थः ... | ३६७ |
| यावत्पदसमभिव्याहृतद्वितीयार्थः ... | ३७४ |
| देशरूपसीमावाचकयावच्छब्दः ... ... | ३८० |
| भिविध्यर्थकयावच्छब्दः ... ... | ३८१ |
| शब्दसमभिव्याहृतद्वितीयार्थः ... | ३८१ |
| कर्मप्रवचनीयप्रतिशब्दः ... ... | ३८२ |
| अन्तराशब्दसमभिव्याहृतद्वितीयार्थः ... | ३८७ |
| तृतीयाकारकारम्भः | ३८९ |
| तृतीयायाः कर्तृत्वार्थकत्वम् ... ... | ३८९ |
| शरादि पुष्प्यन्ति सप्तच्छदा इति... ... | ३९३ |
| काष्ठेन पच्यते ... ... ... ... | ३९९ |
| चैत्रेण ज्ञायते गम्यते इत्यादि ... ... | ३९९ |
| नश्यते घटेनेति तृतीयार्थः ... ... | ३९९ |
| अचेतनस्य भाक्तं कर्तृत्वम् ... ... | ३९९ |
| स्वातन्त्र्यलक्षणम् ... ... ... | ४०० |
| मुख्यं क्रियाकर्तृत्वम् ... ... ... | ४०६ |
| अन्योद्देशेन नाराचक्षेपाद् ब्राह्मणवधविषयः | ४०६ |
| श्येनविधिविषयः ... ... ... | ४१२ |
| करणतृतीया ... ... ... | ४१७ |
| करणत्वलक्षणम् ... ... ... | ४१७ |
| करणतृतीयाशक्तिद्वयम् ... .... | ४१९ |
| धूमेन वह्निमित्यादितृतीया ... ... | ४२० |
| धूमेन वह्निमनुमिनोति न घटेन इत्यादिः | ४२२ |
| हेतुतृतीया ... .... ... ... | ४२४ |
| हेतुवृत्तिगुणत्वपदार्थविचारः ... ... | ४२५ |
| ज्ञाप्यज्ञापकस्वरूपम् ... ... | ४२६ |
| उक्ते प्राचीनमतम् ... ... | ४२९ |
| केन हेतुनेत्यादि ... ... ... | ४३१ |
| सहशब्दप्रयोगप्राप्ततृतीया ... ... | ४३ |
| सहशब्दार्थविचारः ... .... | ४३ |
| इत्थम्भूतलक्षणतृतीया ... ... | ४३९ |
| विशेषणोपलक्षणयोः स्वरूपम् .... ... | ४४० |
| विशेषणोपलक्षणपरिभाषा ... ... | ४४२ |
| चतुर्थीकारकारम्भः | ४४६ |
| संप्रदानत्वलक्षणम् ... ... ... | ४४६ |
| मतान्तरेण मुख्यं संप्रदानत्वम् ... ... | ४५० |
| भाक्तं संप्रदानत्वम् ... ... ... | ४५२ |
| मुख्यं संप्रदानत्वम् ... ... ... | ४५४ |
| 'शत्रवे भयं ददाति' इति ... ... | ४५५ |
| युद्धाय संनह्येत ... ... ... | ४५६ |
| रजकस्य वस्त्रं ददातीत्यादि ... ... | ४५७ |
| नारदाय रोचते कलह इत्यादि .... | ४५८ |
| धारयत्यर्थविवेचनम् ... ... ... | ४५९ |
| यूपाय दारु इत्यादि ... ... ... | ४६४ |
| पाकाय व्रजति इति ... ... ... | ४६७ |
| अश्वाय घासः ... ... ... | ४६७ |
| नमःस्वस्त्यादियोगे चतुर्थी ... ... | ४६८ |
| नमःपदार्थरूपत्यागविचारः ... ... | ४६८ |
| नमस्काररूपनमःपदार्थः ... ... | ४७३ |
| च्विप्रत्ययार्थविचारः ... ... ... | ४७८ |
| पञ्चमीकारकारम्भः | ४८४ |
| पञ्चम्यर्थविचारः ... ... ... | ४८४ |
| व्याघ्राद्बिभेतीतिप्रयोगः ... ... | ४९२ |

| विषयाः | पृ० | विषयाः | पृ० |
|---|---|---|---|
| यवेभ्यो गां वारयतीति.... .... ... | ४९३ | उक्ते तार्किकमतम् .... ... ... | ५६३ |
| आख्यातोपयोगे सूत्रम् ... ... ... | ४९५ | दीधितिकारमतम् ... ... ... | ५६८ |
| जनिकर्तुः सूत्रप्रयोगः ... ... ... | ४९५ | कर्तृत्वशक्ततावच्छेदकनिर्वचनम् ... | ५७३ |
| भुवःप्रभवःसूत्रप्रयोगः ... ... ... | ४९६ | आत्मनेपदस्य कर्मत्वार्थकत्वम् ... ... | ५७५ |
| अपादानत्रैविध्यम् ... ... ... | ४९९ | कर्माख्यातार्थनिर्वचनम् ... ... | ५८२ |
| अन्यतरादिपदार्थविचारः .... .... | ५०२ | ज्ञायते इत्यादिप्रयोगाः ... ... ... | ५८८ |
| अर्जुनः क्रोशादित्यादिप्रयोगः ... .... | ५०८ | लटो वर्तमानकालार्थकत्वम् ... ... | ५८९ |
| षष्ठ्यर्थनिरूपणारम्भः | ५११ | वर्तमानकालस्वरूपम् .... ... ... | ५९० |
| षष्ठ्या संबन्धत्वसामान्यरूपेण संबन्धबोधकत्वम् .... ... ... ... | ५११ | लृटाभविष्यदर्थकत्वं भविष्यत्कालस्वरूपं च | ५९७ |
| यतश्च निर्धारणे ... ... ... ... | ५१४ | लुटोऽनद्यतनभविष्यदर्थकत्वम् ... ... | ६०१ |
| सप्तमीकारकारम्भः | ५२४ | लुङर्थकालनिरूपणम् ... ... | ६०८ |
| आधारत्वविवेचनम् ... ... ... | ५२४ | लङर्थकालनिरूपणम् ... ... ... | ६०९ |
| चर्मणि द्वीपिनं हन्तीति ... ... | ५२८ | लिडर्थकालनिरूपणम् ... ... .... | ६०९ |
| गोषु दुह्यमानासु गतः ... ... ... | ५२९ | लिङलोडर्थनिरूपणम् ... ... .... | ६११ |
| संबोधनप्रथमा | ५३२ | उक्ते निष्कर्षः ... ... ... ... | ६१८ |
| स्त्रीप्रत्ययाः | ५३५ | मीमांसकमतम् ... ... .... ... | ६२६ |
| तद्धितप्रत्ययविचारः | ५३८ | नित्यकर्मविध्यर्थविचारः ... .... | ६२६ |
| धातुप्रकृतिकाः प्रत्ययाः | ५४९ | उक्तमीमांसकमतनिरासः ... ... | ६३२ |
| लकाराणां कर्तृत्ववाचकत्वस्थापनम् ... | ५४९ | तार्किकमतम् ... ... ... ... | ६३३ |
| कर्तृत्वानभिधानविचारः .... ... | ५५० | निषेधवाक्यार्थविचारः ... .... ... | ६३५ |
| "अनभिहिते" इतिसूत्रार्थः ... .... | ५५५ | श्येनवाक्यार्थविचारः ... ... ... | ६३८ |
| लकारार्थे मीमांसकमतम् .... ... | ५६० | तार्किकमतेन सिद्धान्तः ... ... ... | ६४५ |
| | | लङर्थो टीकायाम् .... ... ... | ६४६ |


इति

॥ श्रीः ॥

अथ

सटीकः

# व्युत्पत्तिवादः

॥ श्रीमते हयग्रीवाय नमः ॥

शाब्दबोधे चैकपदार्थेऽपरपदार्थस्य संसर्गः संसर्गमर्यादया भासते ।

अथ

## ॥ व्युत्पत्तिवादादर्शः ॥

॥ भगवते श्रीहयग्रीवाय नमः ॥

आद्यं विद्यानिदानं निखिलभुवनैकैगमानाप्तिरम्यं
धाम्नां धामेन्द्रवाणां दनुजभुजगजां सन्ततं शत्रुनिघ्नम् ।
प्रत्याऽऽलोकार्थसर्वार्थनिर्गतविमलविश्रान्तकन्दैणताक्षं
नर्थं भक्तानन्दकं हयशिरः गुरुमर्गतगुरुं प्रपद्ये ॥

नत्वा श्रीमद्धयग्रीवं विद्याविघ्नविनाशनम् ।
स्मृत्वा स्मृत्वा पदाम्भोजं श्रीमद्गाधरसाग्रिणाम् ॥
करोति बालबोधार्थं मूलार्थप्रतिपादिकाम् ।
व्याख्यां व्युत्पत्तिवादस्य ह्याऽऽदर्शाख्यां सुदर्शनः ॥

ननु न्यायमते प्रत्यक्षानुमानोपमानशब्दभेदात् प्रमाणचतुष्टयं तत्र घटप्रत्यक्षे जाते घटे यो घटत्वादीनां नीलरूपादीनां च संबन्धः स तु संयुक्तविशेषणतासंसर्गेण भासते—चक्षुस्संयुक्तघटे तस्य विशेषणत्वादिति तादृशसंबन्धनिष्ठा विषयता संयुक्तविशेषणतासंनिकर्षप्रयोज्यास्ति घटस्तु चक्षुस्संनिकृष्ट एव, वैशेषिकमते च समवायस्याप्रत्यक्षत्वाद्विशिष्टबुद्ध्या समवायानुमानं भवति तदुक्तं तैः—" इहात्मनि ज्ञानमिहाकाशे शब्द इतीहबुद्धिरुत्पद्यमाना न विना संबन्धमुत्पत्तुमर्हति तेनानुमीयते—अस्ति कश्चित्संबन्धः । " इति । अनुमितौ च पर्वतभूमौ चक्षुस्संनिकृष्टौ वह्निनिष्ठा च विषयता व्याप्तिज्ञानप्रयोज्यास्ति पर्वतीयवह्निसंयोगनिष्ठा च विषयता पक्षधर्मताज्ञानप्रयोज्यास्ति. अर्थात्—धूमपर्वतयोः प्रत्यक्षेण ज्ञातत्वाद् वह्नेश्च व्याप्तिज्ञानेन ज्ञातत्वात् पक्षधर्मताज्ञानेन 'वह्निव्याप्यधूमवान् पर्वतः ' इत्यनेन वह्निसंयोग एव ज्ञायतेऽत एव पक्षधर्मताज्ञानानन्तरं तत्कार्यभूतं ' वह्निमान् पर्वतः ' इत्याकारकं ज्ञानं जायते. अत्र वह्नेर्व्याप्तिज्ञानेन ज्ञानत्वात् पारि-

शेष्यादृन्द्रियसंयोग एव विषय इति । उपमितौ च गवयनिष्ठा विषयता चक्षुस्संनिकर्षप्रयोज्यास्ति गवयगवयपदयोर्वाच्यवाचकभावसंबन्धनिष्ठा च विषयता सादृश्यज्ञानप्रयोज्यास्ति तत्र वाच्यवाचकभावसंबन्धस्य सादृश्यज्ञानेन ज्ञायमानत्वात् प्रथमम् ' गोसदृशो गवयः ' इत्यतिदेशवाक्यश्रवणात् तस्य गवयदर्शनकाले स्मरणात्, इत्येवं प्रत्यक्षानुमानोपमानेतिप्रमाणत्रयस्थले तु येन प्रकारेण संबन्धज्ञानं जायते संबन्धनिष्ठा च विषयता यत्प्रयोज्या भवति तत्सर्वं विज्ञातम्, संप्रति ' राजपुरुषः ' ' नीलघटमानय ' इत्यादिवाक्यजन्यशाब्दबोधस्थले स्वत्वाऽभेदादिसंबन्धानां प्रतीतिः कथं भवति तादृशसंबन्धनिष्ठा विषयता च किं प्रयोज्या भवतीति न ज्ञातमिति तदुक्त्यमित्याशङ्क्य श्रीमद्गदाधरभट्टाचार्यो व्युत्पत्तिवादाख्यं ग्रन्थमारभते—शाब्दबोधे चेति । ' कुम्भकारः ' इतिवत् ' व्युत्पत्तीर्वदतीति व्युत्पत्तिवादः ' इति ग्रन्थनामार्थः ।

शाब्दबोध इति—अत्र चस्त्वर्थे, " शाब्दबोधे " इतिसप्तम्यर्थो निरूपितत्वम्, " एकपदार्थे " इति सप्तम्यर्थोऽनुयोगित्वम्, " अपरपदार्थस्य " इति षष्ठ्यर्थः प्रतियोगित्वम्, संसर्गः=अभेदादिसंबन्धः, संसर्गमर्यादया=आकाङ्क्षया, तृतीयार्थश्च प्रयोज्यत्वम्, भासधात्वर्थो विषयता, आत्मनेपदप्रत्ययार्थ आश्रयता, तथा च ' एकपदार्थानुयोगिकोऽपरपदार्थप्रतियोगिकोऽभेदादिसंबन्धः शाब्दबोधनिरूपिताऽऽकाङ्क्षाप्रयोज्यविषयताश्रयः ' इति वाक्यार्थः, पदार्थद्वयस्य यः संसर्गः स शाब्दबोधे आकाङ्क्षाबलेन भासते इति यावद् यथा— ' नीलघटमानय ' इत्यत्र नीलप्रतियोगिको घटानुयोगिकश्च यो नीलघटयोरभेदसंबन्धः स केनापि पदेनानुपस्थितत्वादाकाङ्क्षाबलेन भासते, यथा च ' राजपुरुषः ' इत्यत्र राजप्रतियोगिकः पुरुषानुयोगिकश्च यः स्वत्वसंबन्धः स आकाङ्क्षाबलेन भासते ' राजपुरुषः ' इत्यादिविशिष्टबुद्धेः संबन्धभानं विनोऽसंभवात्. संबन्धभासकपदस्य चाभावात् तादृशस्वत्वादिसंबन्धस्याकाङ्क्षया भानं स्वीक्रियते, आकाङ्क्षा च "यत्पदेन विना यस्याऽननुभावकता भवेत् । आकाङ्क्षा ।" इति विज्ञेया । ' नीलघटम् ' इत्यादौ पदनिष्ठा विषयता श्रावणप्रत्यक्षप्रयोज्या नीलघटादीनां च विषयता नीलादिपदघटादिपदप्रयोज्या नीलघटाद्योर्योऽभेदादिसंबन्धस्तन्निष्ठा विषयताऽऽकाङ्क्षाज्ञानप्रयोज्या भवतीति यावत् । एवम् ' राजपुरुषः ' इत्यादौ स्वत्वादिसंबन्धनिष्ठा विषयताऽऽकाङ्क्षाज्ञानप्रयोज्या विज्ञेया । अत एव शक्तिवादेऽन्विताभिधानवादखण्डनस्थले ह्यभेदादिसंबन्धे शक्तिं दूषयित्वा संबन्धस्याकाङ्क्षाभास्यत्वं प्रतिपादितम् । ' नीलो घटः ' इत्यादिव्यासस्थले विशेषणविभक्तेरभेदार्थकत्वमते त्वऽभेदादेर्विभक्त्युपस्थापितत्वात् प्रकारत्वमेव भवति न तु संसर्गत्वम् ' नीलाभेदवान् घटः ' इति च तत्र शाब्दबोधः, तस्माद् यत्र यस्य संसर्गत्वं तत्र तस्याकाङ्क्षाभास्यत्वमेव विज्ञेयम्, व्यासस्थलेपि विशेषणविभक्तेर्निरर्थकत्वमते त्वभेदादेः संसर्गत्वमेव भवतीत्याकाङ्क्षाभास्यत्वमेव, तत्र विशेषणविभक्तिः साधुत्वार्था विज्ञेया ' अभेदसंबन्धेन नीलविशिष्टो घटः ' 'स्वत्वसंबन्धेन राजविशिष्टः पुरुषः' इत्यादिश्च शाब्दबोधाकारो विज्ञेय इत्यलम् ।

स च क्वचिदऽभेदः क्वचिच्च तदतिरिक्त एवाधाराधेयप्रतियोग्यनुयोगिविषयविषयिभावादिः ।

अभेदश्च प्रातिपदिकार्थे स्वसमानविभक्तिकेन स्वाव्यवहितपूर्ववर्तिना च पदेनोपस्थापितस्यैव संसर्गमर्यादया भासते यथा— 'नीलो घटः' 'नीलघटमानय' इत्यादौ घटादौ नीलादेः, न तु विरुद्धविभक्तिमत्पदार्थस्य— 'नीलस्य घटः' इत्यादौ नीलघटाभेदान्वयबोधस्य सर्वानुभवविरुद्धत्वात् ।

---

संबन्धो द्विविधः— अभेदलक्षणो भेदलक्षणश्च तत्राभेदलक्षणस्यैकत्वाद् भेदलक्षणस्य चाऽनेकरूपत्वात् प्रथममभेदसंबन्धमाह— स चेति । सः=संसर्गः । कतिपयभेदसंबन्धानाह— क्वचिच्चेति । तदतिरिक्तः=अभेदातिरिक्तः । 'भूतले घटः' 'घटवद् भूतलम्' इत्यादावाऽऽधाराधेयभावः संबन्धः । 'भूतले घटो नास्ति' इत्यादौ प्रतियोग्यनुयोगिभावः संबन्धः । 'घटे ज्ञानम्' 'मोक्षे इच्छा' इत्यादौ घटादिविषयकज्ञानस्य मोक्षादिविषयकेच्छायाश्च प्रतीयमानत्वाद् विषयविषयिभावः संबन्धः— घटादीनां विषयत्वाज्ज्ञानादीनां विषयित्वादित्यर्थः । एतच्च प्राचीनमतेन, नवीनमतेन त्वनुयोगिवृत्तिधर्मस्यैव संबन्धत्वस्वीकारात् क्वचिदाधारतासंबन्धो यथा घटस्य भूतले क्वचिदाधेयतासंबन्धो यथा भूतलस्य घटे एवं क्वचित् प्रतियोगिता क्वचिदनुयोगिता क्वचिद्विषयता क्वचिद्विषयिता संबन्ध इति विवेकः ।

उक्तमभेदसंबन्धं व्युत्पादयति— अभेदश्चेति । "प्रातिपदिकार्थे" इतिसप्तम्यर्थोऽनुयोगित्वम्, "उपस्थापितस्य" इतिषष्ठ्यर्थः प्रतियोगित्वम्, पदार्थस्येतिशेषः, यथा—'नीलो घटः' इत्यत्र प्रातिपदिकार्थे=घटे स्वसमानविभक्तिकेन= घटादिलक्षणानुयोगिवाचकघटपदादिसमानविभक्तिकेन नीलपदेनोपस्थापितस्य नीलपदार्थस्याऽभेदः संसर्गमर्यादया=आकाङ्क्षया भासते नीलपदोत्तरविभक्तेः साधुत्वमात्रार्थकत्वात् । 'नीलघटमानय' इत्यत्र च स्वसमानविभक्तिकत्वाभावेऽप्यभेदस्य भासमानत्वेनोक्तम्— स्वाव्यवहितेति, तथा चात्र स्वं घटपदं तदव्यवहितपूर्ववर्तिना नीलपदेनोपस्थापितस्य नीलपदार्थस्य प्रातिपदिकार्थे घटेऽभेदसंबन्धः संसर्गमर्यादया भासते—तादृशसंबन्धोपस्थापकपदाभावात् । एवकारो भिन्नक्रम इति "स्वसमानविभक्तिकेनैव स्वाव्यवहितपूर्ववर्तिनैव च" इत्यन्वयः, एवकारव्यवच्छेद्यमाह— न त्विति, 'नीलस्य घटः' इत्यत्र नीलपदस्य घटपदसमानविभक्तिकत्वमपि नास्ति षष्ठ्या व्यवधानेन च घटपदाव्यवहितपूर्ववर्तित्वमपि नास्तीति न नीलघटयोरभेदो भासते । नीलपदोत्तरषष्ठ्यां च घटपदाव्यवहितपूर्ववर्तित्वेऽप्यऽयोग्यत्वान्न षष्ठ्यर्थसंबन्धस्याभेदेन घटेऽन्वयः संभवति । स्वसमानेत्यादिनियमाभावे च 'नीलस्य घटः' इत्यत्रापि नीलघटयोरभेदान्वयबोधः प्रसज्येत स तु सर्वविज्ञानुभवविरुद्ध एवेति न विरुद्धविभक्तिमत्पदार्थस्याभेदो भासते इति मूलार्थः ।

स्वसमानविभक्तिकत्वं च स्वप्रकृतिकविभक्तिसजातीयविभक्तिकत्वम् । साजात्यं च विभक्तिविभाजकप्रथमात्वादिना न तु समानानुपूर्वीकत्वं साजात्यम्– 'वेदाः प्रमाणम्' 'शतं ब्राह्मणाः' इत्यादावन्वयबोधानुपपत्तेः ।

ननु "विंशत्याद्याः सदैकत्वे" इत्यनुशासनात् 'शतं ब्राह्मणाः' इत्यादेः साधुत्वेपि 'वेदाः प्रमाणम्' इत्यादयः कथं प्रयोगाः ?– विशेष्यविशेषणवाचकपदयोरसति विशेषानुशासने समानवचनकत्वनियमात्; अन्यथा 'घटा नीलः' इत्यादेरपि साधुताप्रसङ्गात् ।

---

ननु 'वेदाः प्रमाणम्' इत्यादौ वेदादिपदप्रमाणादिपदयोः समानविभक्तिकत्वाभावेपि वेदप्रमाणादिपदार्थयोरभेदो भासत एवेत्याशङ्क्य समानविभक्तिकत्वं निर्वक्ति– स्वसमानेति, स्वम्= अनुयोगिवाचकपदम् । स्वप्रकृतिकेति– यथा 'वेदाः प्रमाणम्' इत्यत्र स्वपदेनाऽनुयोगिवाचकं वेदपदं ग्राह्यं तत्प्रकृतिका विभक्तिर्जस्विभक्तिस्तत्सजातीयविभक्तिकत्वं प्रमाणपदेप्यस्त्येव तस्य प्रथमान्तत्वादिति नात्राऽभेदान्वयबोधानुपपत्तिरित्यर्थः । ननु वेदपदोत्तरं जस्विभक्तिः प्रमाणपदोत्तरं च सुविभक्तिस्तयोः कथं च किं च साजात्यमित्याशङ्क्य विवक्षितसाजात्यस्य स्वरूपमाह– साजात्यमिति, अत्रानुपूर्वीलक्षणं साजात्यं न ग्राह्यं किं तु प्रथमात्वादिधर्मेण तथा च सुजसोरुभयोरपि प्रथमात्वेन साजात्यमस्त्येवेति वेदपदप्रमाणपदयोः समानविभक्तिकत्वं प्राप्तं तेन चाभेदान्वयः प्राप्त इत्यर्थः । समानानुपूर्वीकत्वरूपसाजात्यस्वीकारे बाधकमाह– न त्विति, यदि समानानुपूर्वीकत्वं साजात्यं स्यात्तदा सुजसोः समानानुपूर्वीकत्वाभावात्साजात्यं न स्यात्तथा च वेदपदप्रमाणपदयोः शतपदब्राह्मणपदयोश्च सजातीयविभक्तिप्रकृतित्वाभावात् 'वेदाः प्रमाणम्' 'शतं ब्राह्मणाः' इत्यादौ वेदादेः प्रमाणादेश्चान्वयबोधः=अभेदान्वयबोधो नोपपद्येतेत्यर्थः ।

ननु "विंशत्याद्याः सदैकत्वे" इत्यनुशासनाद्=विंशत्याद्याः संख्यावाचकाः शब्दा यदा संख्येयपरा भवन्ति तदा नियमेनैकवचनान्ता एव भवन्तीति नियमात् 'शतं ब्राह्मणाः' इत्यत्र ब्राह्मणशब्दस्य बहुवचनान्तत्वेपि शतशब्दस्यैकवचनान्तत्वमुपपद्यते, 'वेदाः प्रमाणम्' इत्यत्र वेदपदस्य बहुवचनान्तत्वेपि यत् प्रमाणपदस्यैकवचनान्तत्वेन विशेष्यविशेषणवाचकपदयोर्विभिन्नवचनकत्वं तत् कथमुपपद्येतेत्याशङ्कते– नन्विति । स्वाभिप्रायं शाब्दबोधव्युत्पत्त्या प्रकटयति– विशेष्येति, यथा 'नीलो घटः' इत्यादौ विशेष्यविशेषणवाचकयोर्घटपदनीलपदयोः समानवचनकत्वमस्ति तथा 'वेदाः प्रमाणम्' इत्यत्रापि विशेष्यविशेषणवाचकयोर्वेदपदप्रमाणपदयोः समानवचनकत्वेन भवितव्यं तद्बाधकस्य विशेषानुशासनस्याभावादित्यर्थः । विशेष्यविशेषणवाचकपदयोः समानवचनकत्वनियमानङ्गीकारे बाधकमाह– अन्यथेति, 'घटा नीलः' इत्यादिप्रयोगाणां यदऽसाधुत्वं तत् समानवचनकत्वाभावादेवास्तीति 'वेदाः प्रमाणम्'इत्यादिप्रयोगाणां समानवचनकत्वाभावे कथं साधुत्वं स्यादित्याऽऽक्षेपः ।

समानलिङ्गकस्थले तथानियमोपगमेन 'वेदाः प्रमाणम्' इत्यादेः साधुत्वोपपादनेपि "इति हेतुस्तदुद्भवे" इतिकारिकायाः "इति त्रयः समुदिता हेतुः" इतिकाव्यप्रकाशव्याख्याया असङ्गतिर्दुर्वारैव । एवमऽसमानलिङ्गकस्थले विशेष्यवाचकपदाऽसमानवचनस्यापि विशेषणपदस्य साधुत्वे तादृशस्थले औत्सर्गिकमेकवचनमेव सर्वत्र विशेषणपदानन्तरं प्रयोक्तुमुचितमिति "प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि" "पितरो देवताः" इत्यादेरनुपपत्तिः ।

मैवम्– यत्र विशेष्यवाचकपदोत्तरविभक्तितात्पर्यविपयसंख्याविरुद्धसंख्याया अविवक्षितत्वं तत्र विशेष्यविशेषणपदयोः समानवचनकत्वनियमः, अत एव

---

नन्ु विशेष्यविशेषणवाचकपदयोर्यत्र समानलिङ्गकत्वं भवति तत्रैव समानवचनकत्वस्य नियमोस्ति यथा–'नीलो घटः' इत्यादौ, 'वेदाः प्रमाणम्' इत्यत्र तु वेदपदप्रमाणपदयोः समानलिङ्गकत्वाभावेन समानवचनकत्वाभावेपि न साधुत्वानुपपत्तिरित्याशङ्क्याह–समानलिङ्केति । तथानियमोपगमेन=समानवचनकत्वनियमोपगमेन । एवमपि "इतिहेतुस्तदुद्भवे" इत्याकारककाव्यप्रकाशकारिकाया या "इति त्रयः समुदिता हेतुः" इत्याकारकटीकास्ति तत्र तु त्रिपदहेतुपदयोर्द्वयोरपि पुँल्लिङ्गत्वेन समानलिङ्गकत्वात् समानवचनकत्वेन भवितव्यमिति कथं त्रिपदहेतुपदयोर्विभिन्नवचनकत्वे साधुत्वं स्यादित्युक्तसमानवचनकत्वनियमस्याऽव्याप्तिं प्रदर्शयन्नाक्षिपति–इतिहेतुरिति । उक्तरीत्या "इति त्रयः समुदिता हेतुः" इत्यत्र समानलिङ्गकस्थलेपि समानवचनत्वं नास्तीत्यव्याप्तिं प्रदर्श्याऽसमानलिङ्गकस्थले समानवचनत्वस्यातिव्याप्तिं प्रदर्शयति–एवमिति, उक्तार्थानां प्रयोगो न भवतीति विशेष्यवाचकपदोत्तरवर्तिन्या विभक्त्या संख्याया उक्तत्वाद् विशेषणवाचकपदोत्तरं द्विवचनबहुवचनयोरपेक्षैव नास्तीति साधुत्वार्थमौत्सर्गिकमेकवचनमेव प्राप्नोतीति 'वेदाः प्रमाणम्' इत्यत्र प्रमाणपदोत्तरमेकवचनमेवौत्सर्गिकं यदि युक्तम्–समानवचनकत्वनियमस्य समानलिङ्गकस्थले एव स्वीकारात् तदा विशेष्यविशेषणवाचकपदयोस्तादृशस्थले=असमानलिङ्गकस्थले सर्वत्रौत्सर्गिकमेकवचनमेव विशेषणवाचकपदोत्तरं प्रयोक्तव्यमिति "प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि" इत्यत्र प्रमाणपदोत्तरम् "पितरो देवताः" इत्यत्र च देवतापदोत्तरमेकवचनमेव प्रयोक्तव्यमासीन्न तु बहुवचनम्–विशेष्यविशेषणवाचकपदयोः समानवचनकत्वनियामकस्य समानलिङ्गकत्वस्याभावादित्यर्थः, तथा च समानलिङ्गकस्थले एव समानवचनकत्वं भवतीति नियमस्याऽसंभवाद् यथा "प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि" इत्यत्र समानलिङ्गकत्वाभावेपि समानवचनकत्वं तथा 'वेदाः प्रमाणम्' इत्यत्रापि समानलिङ्गकत्वाभावेपि समानवचनकत्वं युक्तं तच्च नास्तीति कथं साधुत्वमित्याक्षेपः ।

उक्तरीत्याक्षिप्य परिहरति– मैवमिति । यत्रेति– यथा 'नीला घटाः' इत्यत्र विशेष्यवाचकपदं घटपदं तदुत्तरवर्तिविभक्तिर्जस्विभक्तिस्तत्तात्पर्यविषयीभूता संख्या बहुत्वसंख्या तद्विरुद्ध-

भवान् हि भगवानेव [1]गतो भेदः परस्परम् ॥
[2]महत्यागदयायुक्तः [3]सत्यभामासमन्वितः ॥ ३ ॥

[4]वेमव्यापाराकलनम[5]तुरीस्पर्शमचिरा–
दनुन्मीलत्तन्तुप्रकरघटनायासमसकृत् ॥
विषीदत्पाञ्चालीविपदपनयैकप्रणयिनः
पटानां निर्माणं पतगपतिकेतोरवतु नः ॥ ४ ॥

भ्रमयति [6]भवपित्तं चेद्भजभज नर [7]सूतशेखरं [8]कृष्णम् ॥
[9]सद्रोरसेन [10]सहंसितम[11]नुत्रुटिकं सर्वथा त्यज [12]स्नेहम् ॥ ५ ॥

[13]अन्धंतमश्चेदयि बाधते त्वां सरोजनेत्रं जगदेकसूत्रम् ॥
सुधाचरित्रं परमं पवित्रं कुरुष्व मित्रं वसुदेवपुत्रम् ॥६॥

द्वाविह दृष्टौ सृष्टौ दुस्तरसंसृतितरङ्गिणीतरणे ॥
[14]उडुपकुलपतिः कृष्णः श्रीरामस्त[15]रणिकुलपतिश्चान्यः ॥७॥

मेघैर्मेदुरमम्बरं वनभुवः श्यामास्तमालद्रुमै-
र्नक्तं भीरुरयं त्वमेव तदिमं राधे गृहं प्रापय ॥
इत्थं नन्दनिदेशतश्चलितयोः प्रत्यध्वकुञ्जद्रुमं
राधामाधवयोर्जयन्ति यमुनाकुले रहःकेलयः॥ ८ ॥

---

१ गकारेण भेदः २महती या· गदा तया युक्त. पक्षे महः उत्सवः त्यागो दानं दया करुणा एतैर्युक्त. ३ सत्यभामया समन्वितः पक्षे सत्यं सूनृत भा कांतिः मा लक्ष्मीः आभि· सम्यग्युक्तः ४ वेमा प्राकृते 'घोटें' इत्युच्यते तद्व्यापाररहितम् ५ तुरी प्रा० 'तुरई' इत्युच्यते तत्स्पर्शं विना. ६ भव· संसार· स एव पित्तं भ्रमोत्पादकत्वात्. ७ सूतेषु शेखर श्रेष्ठ पक्षे सूतशेखरनामान रसम् पित्तशामको हि सूतशेखर इति प्रसिद्धिः ८ कृष्ण कृष्णनामानम् देवं पक्षे वर्णतः कृष्णम् ९ सता या गीर्वाणी तस्या रसो ब्रम्हानन्दरूपो रसस्तेन. पक्षे सम्यग्गोदुग्धेन. १० हसितेन सहितम् पक्षे सशर्करम् ११ अनुक्षणं पक्षे त्रुटिरेला तद्युक्तम् १२ पुत्रधनादिलोभम्. पक्षे तैलादिकं पित्तजनकत्वात् १३ अन्धतमः नरकः पक्षे गाढान्धकारः १४ उडुपो नक्षत्रनाथः स· कुलपतिर्यस्य, पक्षे उडुपान्यल्पनाव. तासा कुल समूहस्तत्पतिः १५ तरणिः सूर्यः पक्षे नौः ।

पुञ्जीभूतं प्रेम गोपाङ्गनानां मूर्तीभूतं भागधेयं यदूनाम् ॥
एकीभूतं गुप्तचित्तं श्रुतीनां श्यामीभूतं ब्रह्म मे सन्निधत्ताम् ॥९॥
परमिममुपदेशमाद्रियध्वं निगमवनेषु नितान्तखेदखिन्नाः ॥
विचिनुत भवनेषु वल्लवीनामुपनिषदर्थमुलूखले निबद्धम् ॥१०॥
नवनीलमेघरुचिरः परः पुमानवनिमिवाप्य[1] धृतगोपविग्रहैः[2] ॥
नवनीयकीर्तिरमरैरपि स्वयं नवनीतभिक्षुरधुना स चिन्त्यते ॥११॥
खिन्नोसि मुञ्च शैलं विभृमो वयमिति वदत्सु शिथिलभुजः ॥
भरभुग्नविनतबाहुषु गोपेषु हसन् हरिर्जयति ॥ १२ ॥
दर्पणार्पितमालोक्य मायास्त्रीरूपमात्मनः ॥
आत्मन्येवानुरक्तो वः शिवं दिशतु केशवः ॥ १३ ॥
हृदयं कौस्तुभोद्भासि हरेः पुष्णातु वः श्रियम् ॥
राधाप्रवेशरोधाय दत्तमुद्रमिव श्रिया ॥ १४ ॥
रामो[3] नाम बभूव हुं तदबला सीतेति हुं तौ पितु-
र्वाचा पञ्चवटीवने निवसतस्तामाहरद्रावणः ॥
कृष्णेनेति पुरातनीं निजकथामाकर्ण्य मात्रेरितां
सौमित्रे क्व धनुर्धनुर्धनुरिति प्रोक्ता गिरः पान्तु वः ॥१५॥
पीठे पीठनिषण्णबालकगले तिष्ठन्सगोपालको
यन्त्रान्तः[4]स्थितदुग्धभाण्डमवभिद्याच्छाद्य घण्टारवम् ॥
वक्त्रोपान्तकृताञ्जलिः कृतशिरःकम्पं पिबन् यः पयः
पायादागतगोपिकानयनयोर्गण्डूषफूत्कारकृत् ॥ १६ ॥
कस्त्वं कृष्णमवेहि मां किमिह ते मन्मन्दिराशङ्कया
युक्तं तन्नवनीतभाजनपुटे न्यस्तः किमर्थं करः ॥
कर्तुं तत्र पिपीलिकापनयनं सुप्ताः किमुद्बोधिता
बाला वत्सगतिं विवेक्तुमिति संजल्पन् हरिः पातु वः ॥१७॥

---

१ पृथ्वीम्. २ देहः. ३ यथा माता स्वपुत्रप्रस्वापनाय प्राचीनाः कथाः कथयति तथा यशोदाऽपि राम इति कश्चिद्राजा आसीदिति वदति स्म तत् श्रुत्वा कृष्णोपि हुकारं दत्तवान्. ४ शिक्यम्

राधा पुनातु जगदच्युतदत्तचित्ता
मन्थानमाकलयती दधिरिक्तपात्रे ॥
तस्याः स्तनस्तबकचूचुकलोलदृष्टि-
र्देवोपि दोहनधिया वृषभं दुदोह ॥ १८ ॥

अङ्गुल्या कः कपाटं प्रहरति कुटिले माधवः किं वसन्तो[1]
नो चक्री किं कुलालो[2] नहि धरणिधरः[3] किं द्विजिह्वः[4] फणीन्द्रः ॥
नाहं घोराहिमर्दी किमुत खगपति[5]र्नो हरिः[6] किं कपीन्द्र
इत्येवं सत्यभामाप्रतिवचनजितः पातु वश्चक्रपाणिः ॥ १९ ॥

माधव रन्धनसमये मा रव मुरलीमहो रहोरसिकाम्
विरसतरू रसतरतां यत् कृशातरतां कृशानुराधत्ते ॥ २० ॥

गोपाल इति कृष्ण त्वं प्रचुरक्षीरवाञ्छया ॥
श्रितो मातुः स्तनक्षीरमप्यलब्धं कृतं त्वया ॥ २० ॥

## गौरी ।

श्रीः ॥ प्रत्यासन्नविवाहमङ्गलविधौ देवार्चनव्यग्रया
दृष्ट्वाग्रे परिणेतुरेव लिखितां गङ्गाधरस्याकृतिम् ॥
उन्मादस्मितरोषलज्जितधिया गौर्या कथंचिच्चिरा-
द्वृद्धस्त्रीवचनात्प्रिये विनिहितः पुष्पाञ्जलिः पातु वः ॥ १ ॥

वक्षःपीठे निरीक्ष्य स्फटिकमणिशिलामण्डले स्वच्छभासि
स्वच्छायां सेर्ष्यसूया त्वमियमिति मुहुः सत्यमाश्वासिताऽपि ॥
वामे मे दक्षिणेस्याः श्रवसि कुवलयं नाहमित्यालपन्ती
दत्ताऽऽश्लेषा सहासं मदनविजयिना पार्वती वः पुनातु ॥ २ ॥

स्वेदस्ते कथमीदृशः प्रियतमे त्वन्नेत्रवह्नेर्विभो
कस्माद्वेपितमेतदिन्दुवदने भोगीन्द्रभीतेस्तव ॥

---

१ वसन्तो लक्ष्मीपतिश्च २ कुलालो विष्णुश्च. ३ शेषो विष्णुश्च. ४ सर्प. ५गरुडः ६ कपीन्द्रो विष्णुश्च. ७ समीपवर्ती ८ भर्तुः ९ चित्तविभ्रमः १० स्वमतिबिम्बम् ११ सेर्ष्या. १२ कर्णे.

रोमाञ्चः[1] कथमेष देव भगवन् गङ्गाम्भसां सीकरै-
रित्थं भर्तरि भाव[2]गोपनपरा गौरी चिरं पातु वः ॥ ३ ॥
भिक्षुः क्वास्ति बलेर्मखे पशुपतिः किं नास्त्यसौ गोकुले
मुग्धे पन्नगभूषणः सखि सदा शेते च तस्योपरि ॥
आर्ये मुञ्च विषाद[3]माशु कमले नाहं प्रकृत्या चपला[4]
चेत्थं वै गिरिजासमुद्रसुतयोः संभाषणं पातु वः ॥ ४ ॥

हरकण्ठग्रहानन्दमीलिताक्षीं नमाम्युमाम् ॥
कालकूटस्य संस्पर्शाज्जातमूर्छागमामिव ॥ ५ ॥

उदारान्[5]स्त्वद्दते नान्यान् प्रपश्याम्ययि पार्वति ॥
श्रीरामभक्तिमाणिक्यमदेयमपि देहि मे ॥ ६ ॥

विद्राणे[6] रुद्रवृन्दे सवितरि तरले वज्रिणि ध्वस्तवज्रे
जाताशङ्के शशाङ्के विरमति मरुति त्यक्तवैरे कुबेरे ॥
वैकुण्ठे कुण्ठितास्त्रे महिषमतिरुषं पौरुषोपघ्न[7]निघ्नं
निर्विघ्नं निघ्नती वः शमयतु दुरितं भूरिभावा[8] भवानी ॥ ७ ॥

पार्वती[9]मोषधीमेकामपर्णा[10] मृगयामहे ॥
शूली[11] हालाहलं पीत्वा यया मृत्युंजयो[12] भवत् ॥ ८ ॥

## लक्ष्मीः ।

श्रीः ॥ पायात्पयोधिदुहितुः कपोलामलचन्द्रमाः ॥
यत्र सङ्क्रान्तबिम्बेन हरिणा हरिणायितम्[13] ॥ १ ॥

---

१ सात्त्विकाविर्भावसूचक रोमहर्षणम् २ स्वाभिप्रायगोपनपरा. ३खेदम् पक्षे विषमत्तीतिविषादस्तम् ४ चञ्चला ५ ओः शिवस्य दारान् भार्याम् पक्षे उदारान् औदार्यशीलान् ६ पलायिते. ७ पौरुषोपघ्नः पराक्रमाश्रयो महिषो निघ्न आयत्तो यस्मिन् कर्मणि यद्वा पौरुषोपघ्नानां पराक्रमिणां निघ्न आयत्तस्तमिति महिषविशेषणम्. ८ प्रभूतप्रभावा. ९ पर्वतसम्बन्धिनीम्. पर्वतपुत्रीं च १० पर्णरहिताम्. एतन्नाम्नीं च. ११ शूलरोगवान् त्रिशूलधारी च. १२ मृत्युनाशकः एतन्नाम्ना प्रसिद्धश्च १३ हरिण इवाचरितम् ।

उत्तिष्ठन्त्या रतान्ते भरमुरगपत्नौ पाणिनैकेन कृत्वा
धृत्वा चान्येन वासो विगलितकबरीभारमंसे वहन्त्याः ॥
भूयस्तत्कालकान्तिद्विगुणितसुरतप्रीतिना शौरिणा वः
शय्यामालिङ्ग्य नीतं वपुरलसलसद्बाहु लक्ष्म्याः पुनातु ॥२॥
कमलासनकमलेक्षणकमलारिकिरीटकमलभृद्वाहैः ॥
नुतपदकमला कमला करधृतकमला करोतु मे कमलम् ॥३॥

## सरस्वती ।

श्रीः ॥ शारदा शारदाम्भोजवदना वदनाम्बुजे ॥
सर्वदा[1] सर्वदाऽस्माकं सन्निधिं[2] सन्निधिं क्रियात् ॥ १ ॥
करबदरसदृशमखिलं भुवनतलं यत्प्रसादतः कवयः ॥
पश्यन्ति सूक्ष्ममतयः[3] सा जयति सरस्वती देवी ॥ २ ॥

## श्रीरामचंद्रः ।

श्रीः ॥ श्रान्तोसि चेत्संसृति[4]तीव्रतापतः
सीतान्वितं[5] मारुतपोतसेवितम्[6] ॥
पलाशिसंघातविवृद्धविक्रमं[7]
रामं धृताकारमुपेहि[8] सत्वरम् ॥ १ ॥
यातायातैः सुबहुभिः श्रान्तोसि यदि हे सखे ॥
एकं गुरुघनच्छायं[9] सीतारामपदं[10] भज ॥ २ ॥

---

१ सर्वदात्री २ उत्तमनिधिरूपम् ३ कुशाग्रबुद्धय ४ ससारः ५ जानकीसहितम् पक्षे सीतया लागलपद्धत्या युक्तम् ६ हनूमता सेवितम् पक्षे मन्दवायुना सेवितम् ७ पलाशिनो राक्षसास्तेषा सघातेन मारणेन विवृद्धो विक्रमो यस्य. पक्षे पलाशिनो वृक्षास्तेषा समूहेन ८ गृहीतावतारम् पक्षे धृतः आकारो येन त आराममित्यर्थः ९ गुरुरेव घनो मेघस्तस्य छाया यस्मिन्. पक्षे गुर्वी महती घना निबिडा छाया यस्मिन् १० सीतासहितस्य रामस्य पद पक्षे सीतं शीतल यदारामपदं उपवनस्थानम् ।

राकारोच्चारमात्रेण मुखान्निर्याति पातकम् ॥
पुनः प्रवेशसन्देहान्मकारस्तत्कपाटवत् ॥ ३ ॥
अस्त्रामास तृणं प्रियाद्रुहि तृणामास स्मरारेर्धनु-
र्दारामास मुनेः शिलाऽपि नृवरामास स्वयं पादुका ॥
कुल्यामास महार्णवोऽपि कपयो योधाम्बभूवुस्तदा
पौलस्त्यो मशकाम्बभूव भगवंस्त्वं मानुपामासिथ ॥ ४ ॥

नालीकभङ्गकृदतावि[1] नदीनबन्धु-[2]
र्नक्षत्रपो[3] नवसुधाविभवैकहेतुः[4] ॥
राजा किमिन्दुरपि नार्यभिमानहारी[5]
राजा परं जयति राघवसार्वभौमः ॥ ५ ॥

कान्तं[6] श्रीरघुतिलकं सर्वजगत्पालकं विहाय जनः ॥
अनुसरति नरं कान्तं[7] नानाकष्टाश्रयं शिवशिवाय ॥ ६ ॥

## महाजनप्रशंसा ।

श्रीः ॥ सौजन्याऽमृतसिन्धवः[8] परहितप्रारब्धवीरव्रता
वाचालाः परवर्णने निजगुणाऽऽलापे च मौनव्रताः ॥
आपत्स्वप्य[9]विलुप्तवीर्यनिचयाः संपत्स्वनुत्सेकिनो[10]
मा भूवन् खलवक्त्रनिर्गतविषज्वालातताः[11] सज्जनाः ॥१॥
मुखेन नोद्गिरत्यूर्ध्वं हृदयान्नाऽऽनयत्यधः ॥
जरयत्यन्तरे[12] साधुर्दोषं विषमिवेश्वरः ॥ २ ॥
विकृतिं नैव गच्छन्ति सङ्गदोषेण साधवः ॥
आवेष्टितं महासर्पैश्चन्दनं न विषायते ॥ ३ ॥

---

१ अलीकभङ्गकृत् पक्षे कमलविकासकृत्. २ अनाथबन्धुः पक्षे नदीनः समुद्रस्तद्बन्धुः ३ क्षत्रियश्रेष्ठ. पक्षे नक्षत्रनायकः ४ वसुधैश्वर्यस्य कारणम् पक्षे नवीनायाःसुधाया यो विभवस्तस्य मुख्यकारणम् ५ शत्रुमानहारी. पक्षे नारीणा मानहारकः ६ रमणीय पक्षे ककारान्तम् ७ रमणीय पक्षे ककारोन्ते यस्य तादृशं नरं नरकमित्यर्थः ८ सुजनतामृतसमद्राः ९ विपत्तिकाले १० गर्वर्र्
११ व्याप्ताः १२ जीर्णं करोति.

सुजनो न याति वैरं परहितकार्ये विनाशकालेऽपि ॥
छेदेऽपि चन्दनतरुः सु[1]रभयति मुखं कुठा[2]रस्य ॥४॥

मज्जन्तोऽपि विप[3]त्पयोधिगहने निःशङ्कधैर्याऽऽवृताः
कुर्वन्त्येव परोपकारमनिशं सन्तो यथाशक्ति वै ॥
राहोरु[4]ग्रकरालवक्त्रकुहरग्रासाभिभूतोऽप्यलं
चन्द्रः किं न जनं करोति सुखिनं ग्रासाऽवशेषैः करैः[5] ॥ ५ ॥

धवलयति समग्रं चन्द्रमा जीवलोकं
किमिति निजकलङ्कं नाऽऽत्मसंस्थं प्र[6]मार्ष्टि ॥
भवति विदितमेतत्प्रायशः सज्जनानां
परहितनिरतानामादरो नाऽऽत्मकार्ये ॥ ६ ॥

अहो महत्त्वं महताम[7]पूर्वं विपत्तिकालेऽपि परोपकारः ॥
यथाऽऽस्य[8]मध्ये पतितोऽपि राहोः कलानिधिः पुण्यचयं ददाति ७

उपकतु प्रियं क[9]ु कर्तुं स्नेहम[10]कृत्रिमम् ॥
सज्जनानां स्वभावोऽयं केनेन्दुः शीतलीकृतः ॥ ८ ॥

मान्या एव हि मान्यानां मानं कुर्वन्ति नेतरे ॥
शम्भुर्बिभर्ति मूर्ध्नेन्दुं स्वर्भा[11]नुस्तं जिघृ[12]क्षति ॥ ९ ॥

ये जाते व्य[13]सने निरा[14]कुलधियः संपत्सु नाऽभ्युन्नताः
प्राप्ते नैव पराङ्मुखाः प्रणयिनि प्राणप्रयोगैरपि ॥
ह्री[15]मन्तः स्वगुणप्रकाशनविधावन्यस्तुतौ पण्डिता-
स्ते भूमण्डलमण्डनकैतिलकाः सन्तः कियन्तो जनाः ॥१०॥

ये दीनेषु दयालवः स्पृशति यानल्पोऽपि न श्रीमदो
व्यग्रा ये च परोपकारकरणे हृ[16]ष्यन्ति ये याचिताः ॥

---

१ सुगन्धयति. २ परशोः ३ विपदेव पयोधि. समुद्रः ४ करालं-भयङ्करं. ५ किरणैः ६ शोधयति. नाशयतीत्यर्थः ७ अलौकिकम्. ८ मुखमध्ये. ९ वृद्धिम् १० निष्कपटम्. ११ राहुः १२ ग्रहीतुमिच्छति. १३ सङ्कटे १४ अव्यग्रमनसः १५ लज्जावन्तः १६ हर्षयुक्ता भवन्ति.

स्वस्थाः सन्ति च यौवनोन्मदमहाव्याधिप्रकोपेऽपि ये
तैः स्तम्भैरिव सुस्थिरैः किल भरक्रान्ता धरा[1] धार्यते॥ ११॥
संपदि यस्य न हर्षो विपदि विषादो रणे च धीरत्वम् ॥
तं भुवनत्रयतिलकं[2] जनयति जननी सुतं विरलम् ॥ १२॥
शरदि न वर्षति गर्जति वर्षति वर्षासु निःस्वनो[3] मेघः ॥
नीचो वदति न कुरुते वदति न साधुः करोत्येव ॥ १३ ॥
गवादीना पयोऽन्येद्युः[4] सद्यो वा जायते दधि ॥
क्षीरोदधेस्तु नाद्यापि महतां विकृतिः[5] कुतः ॥ १४ ॥
निर्गुणेष्वपि सत्त्वेषु[6] दयां कुर्वन्ति साधवः ॥
नहि संहरते ज्योत्स्नां[7] चन्द्रश्चाण्डालवेश्मनि[8] ॥ १५ ॥
सुजनं व्यजनं[9] मन्ये चारुवंश[10]समुद्भवम् ॥
आत्मानं च परिभ्राम्य परतापनिवारणम् ॥ १६ ॥
इहानेके सन्तः सततमुपकारिण्युपकृति
कृतज्ञाः कुर्वन्तो जगति निवसन्तोऽपि सुधियः ॥
कियन्तस्ते सन्तः सुकृतपरिपाकप्रणयिनो
विना स्वार्थं येषां भवति परकृत्यव्यसनिता ॥ १७ ॥
अर्थः सुखं कीर्तिरपीह मा भूदनर्थ एवाऽस्तु तथाऽपि धीराः॥
निजप्रतिज्ञामनुरुध्यमाना महोद्यमाः कर्म समारभन्ते ॥ १८॥
अपकारिषु यः साधुः स साधुः सद्भिरुच्यते ॥
उपकारिषु यः साधुः साधुत्वे तस्य को गुणः ॥ १९ ॥
आदिमध्यनिधनेषु सौहृदं सज्जने भवति नेतरजने[11] ॥
छेदतापननिवर्षताडनैर्नाऽन्यभावम्[12]उपयाति काञ्चनम्[13] ॥ २० ॥
क्षुद्राः[14] सन्ति सहस्रशः स्वभरणव्यापारमात्रोद्यताः

---

१ पृथ्वी. २ श्रेष्ठम्. ३ शब्दरहितः ४ अन्यस्मिन् दिवसे. ५ विकारः ६ प्राणिषु ७ चन्द्रकान्तिम्. ८ चाण्डालगृहे. ९ 'विंजणा' इतिलोके. १० वेणुः कुलं च. ११ दुर्जने १२ विकृतिम् १३ सुवर्णम्. १४ नीचाः ।

स्वार्थो यस्य परार्थ एव स पुमानेकः सताम[1]ग्रणीः ॥
दुष्पूरोदरपूरणाय पिबति स्रोतःपतिं[2] वाडवो[3]
जीमूत[4]स्तु निदाघ[5]संभृतजगत्संतापविच्छित्तये ॥ २१ ॥
नहि भवति वियोगः स्नेहविच्छेदहेतु-
र्जगति गुणनिधीनां सज्जनानां कदाचित् ॥
घन[6]तिमिरनिबद्धो दूरसंस्थोऽपि चन्द्रः
किमु कुमुदवनानां प्रेमभङ्गं करोति ॥ २२ ॥
उदधि[2]रवधि[7]रुर्व्यास्तं हनूमां[8]स्ततार
निरवधि गगनं चेत्काण्डकोशे विलीनम् ॥
इति परिमितिमन्तो भान्ति सर्वेऽपि भावाः
सतु निरवधिरेकः सज्जनानां विवेकः ॥ २३ ॥
चन्द्रः क्षयी प्रकृ[9]तिवक्रतनुर्जडात्मा[10]
दोषा[11]ऽऽकरः स्फुरति मित्र[12]विपत्तिकाले ॥
मूर्ध्ना तथाऽपि विधृतः परमेश्वरेण[13]
नैवाऽऽश्रितेषु महतां गुणदोषशङ्का ॥ २४ ॥
उदये सविता रक्तो रक्तश्चाऽस्तमये तथा ॥
संपत्तौ च विपत्तौ च महतामेकरूपता ॥ २५ ॥
दृश्यन्ते भुवि भूरिनिम्बतरवः कुत्राऽपि ते चन्दनाः
पाषाणैः परिपूरिता वसुमती वज्रो[14] मणिर्दुर्लभः ॥
श्रूयन्ते करटा[15]ऽऽरवाः प्रतिदिनं चैत्रे कुहू[16]कूजितं

---

१ अग्रेसरः २ समुद्रम्. ३ वडवाग्नि. ४ मेघ ५ ग्रीष्मः ६ गाढान्धकारः ७ मर्यादा ८ तीर्णवान् ९ प्रकृत्या स्वभावेन वक्रा तनुर्यस्य १०जड-स्वभावः डलयोः सावर्ण्यात् जलात्मा जलरुपः ११ दोषा रात्रिस्तस्याःकरः पक्षे दोषाणां आकर. खनिरिति यावत्. १२मित्र सूर्य. तस्य विपत्तिकालः अस्त-कालस्तस्मिन् पक्षे मित्रं सुहृत् तद्विपत्तिकाल. १३ सदाशिवेन पक्षे केनचि-त्स्वामिना. १४ हीरकमणिः १५ काकशब्दाः १६ कोकिलशब्दः ।

तन्मध्ये खलसंकुलं जगदिदं द्वित्राः क्षितौ सज्जनाः॥२६॥

इक्षोरग्रात्क्रमशः पर्वणिपर्वणि यथा रसविशेषः ॥
तद्वत्सज्जनमैत्री विपरीतानां च विपरीता ॥ २७ ॥

आरभन्तेऽल्पमेवाज्ञाः कामं व्यग्रा भवन्ति च ॥
महाऽऽरम्भाः कृतधियस्तिष्ठन्ति च निराकुलाः ॥ २८ ॥

पिबन्ति नद्यः स्वयमेव नाऽम्भः स्वयं न खादन्ति फलानि वृक्षाः॥
नाऽदन्ति [1]सस्यं खलु वा[2]रिवाहाः परोपकाराय सतां विभू[3]तयः॥२९॥

गुणायन्ते दोषाः सुजनवदने दुर्जनमुखे
गुणा दोषायन्ते तदिदमपि नो वि[4]स्मयपदम् ॥
महामेघः क्षारं पिबति कुरुते वारि मधुरं
फ[5]णी क्षीरं पीत्वा वमति गरलं दुःसहतरम् ॥ ३० ॥

संपदो महतामेव महतामेव चाऽऽपदः ॥
वर्धते क्षीयते चन्द्रो न तु तारागणः क्वचित् ॥ ३१ ॥

किं जन्मना च महता पितृपौरुषेण
शक्त्या हि याति निजया पुरुषः प्रतिष्ठाम् ॥
कुम्भा न कूपमपि शोषयितुं समर्थाः
कुम्भोद्भवेन[6] मुनिनाऽम्बुधिरेव पीतः ॥ ३२ ॥

महतां सद्व्ययेनैव विपत्तिरपि शोभते ॥
दन्तभङ्गो हि नागानां श्लाघ्यो[7] [8]गिरिविदारणे ॥ ३३ ॥

ऐश्वर्यस्य विभूषणं सुजनता शौर्यस्य वाक्संयमो[9]
ज्ञानस्योपशमः[10] कुलस्य विनयो वित्तस्य पात्रे व्ययः ॥
अक्रोधस्तपसः क्षमा बलवतां धर्मस्य निर्व्याजता[11]
सर्वेषामपि सर्वकारणमिदं [12]शीलं परं भूषणम् ॥ ३४ ॥

---

१ धान्यम् २ मेघाः ३ ऐश्वर्याणि. ४ आश्चर्यस्थान. ५ सर्पः ६ अगस्त्येन. ७ स्तुत्य ८ पर्वतः ९ नियमनम् १० शान्तिः ११ कपटराहित्यम् १२ स्वभावः

अनुकुरुतः[1] खलसुजनावग्रिमपाश्चात्यभागयोः सूच्याः[2] ॥
विदधाति[3] रन्ध्रमेको गुणवान्[4] अन्यस्तु पिदधाति[5] ॥ ३५ ॥

दाक्षिण्यं[6] स्वजने दया परजने[7] शाठ्यं[8] सदा दुर्जने
नीतिः साधुजने नयो[9] नृपजने विद्वज्जनेष्वार्जवम् ॥
शौर्यं शत्रुजने क्षमा गुरुजने नारीजने धूर्तता
ये चैवं पुरुषाः कलासु कुशलास्तेष्वेव लोकस्थितिः॥३६॥

केनाञ्जितानि नयनानि मृगाङ्गनानां
को वा करोति रुचिराऽङ्गरुहान्[10] मयूरान् ॥
कश्चोत्पलेषु दलसंनिचयं करोति
को वा करोति विनयं कुलजेषु पुंसु ॥ ३७ ॥

आरभ्यते न खलु विघ्नभयेन नीचैः
प्रारभ्य विघ्नविहता विरमन्ति मध्याः ॥
विघ्नैः पुनःपुनरपि प्रतिहन्यमानाः
प्रारभ्य चोत्तमजना न परित्यजन्ति ॥ ३८ ॥

प्रिया न्याय्या[11] वृत्ति[12]र्मलिन[13]मसुभङ्गे[14]ऽप्यसुकरं
त्वसन्तो नाभ्यर्थ्याः[15] सुहृदपि न याच्यः कृशधनः[16] ॥
विपद्युच्चैः स्थेयं पदमनुविधेयं[17] च महतां
सतां केनोद्दिष्टं[18] विषम[19]मसिधारा[20]व्रतमिदम् ॥ ३९॥

प्रदानं प्रच्छन्नं[21] गृहमुपगते संभ्रमविधिः
प्रियं कृत्वा मौनं सदसि कथनं नाप्युपकृतेः[22] ॥
अनुत्सेको लक्ष्म्यां निरभिभवसाराः परकथाः
सतां केनोद्दिष्टं विषममसिधाराव्रतमिदम् ॥ ४० ॥

---

१ अनुकरणं कुरुतः २ प्राकृते 'सुई' इत्युच्यते ३ उत्पादयति ४ गुणस्तन्तुः पक्षे सुशीलत्वादिः ५ आच्छादयति ६ औदार्यम् ७ अन्यजने ८ अनृजुत्वम् ९ विनय. १० लोमानि ११ न्यायादागता १२ वर्तनम् १३ दुष्कृतम् १४ प्राणनाशेऽपि १५ न याचनीयाः १६ स्वल्पधन· १७ अनुसरणीयम् १८ उपदिष्टम् १९ अतिकठिनम् २० खड्गधाराताण्डवम् २१ गुप्तम् २२ उपकारस्य ।

घृष्टंघृष्टं पुनरपि पुनश्चन्दनं चारुगन्धं
छिन्नंछिन्नं पुनरपि पुनः स्वादु चैवेक्षुकाण्डम् ॥
दग्धंदग्धं पुनरपि पुनः काञ्चनं कान्तवर्णं
न प्राणान्ते प्रकृतिविकृतिर्जायते चोत्तमानाम् ॥ ४१ ॥

दुर्जनवचनाङ्गारैर्दग्धोऽपि न विप्रियं[1] वदत्यार्यः ॥
अगुरुरपि विदह्यमानःस्वभावगन्धं परित्यजति किं नु ॥४२॥

सत्सङ्गाद्भवति हि साधुता खलानां
साधूनां नहि खलसङ्गमात्खलत्वम् ॥
आमोदं[2] कुसुमभवं मृदेव धत्ते
मृद्गन्धं नहि कुसुमानि धारयन्ति ॥ ४३ ॥

अप्रियवचनदरिद्रैः प्रियवचनाढ्यैः स्वदारपरितुष्टैः ॥
परपरिवाद[3]निवृत्तैः क्वचित्क्वचिन्मण्डिता[4] वसुधा ॥ ४४ ॥

असाधुः साधुर्वा भवति खलु जात्यैव पुरुषो
न सङ्गाद्दौर्जन्यं नहि सुजनता कस्यचिदपि ॥
प्ररूढे संसर्गे[5] मणिभुजगयोर्जन्मजनिते
मणिर्नोऽहेर्[6]दोषान्स्पृशति नहि सर्पो मणिगुणान् ॥ ४५ ॥

वनेऽपि सिंहा मृगमांसभक्षिणो बुभुक्षिता नैव तृणं चरन्ति ॥
एवं कुलीना व्यसना[7]भिभूता न नीचकर्माणि समाचरन्ति ॥४६॥

कान्ताकटाक्षविशिखा[8] न लुनन्ति[9] यस्य
चित्तं न निर्दहति कोपकृशानुतापः[10] ॥
कर्षन्ति भूरिविषयांश्च न लोभपाशा
लोकत्रयं जयति कृत्स्नमिदं[11] स धीरः ॥ ४७ ॥

पतितोऽपि राहुवदने तरणिर्बोधयति[12] पद्मखण्डानि ॥

---

१ अनिष्टम्. २ सुगन्धम्. ३ दूषणम्. ४ शोभिता. ५ सबन्धे. ६ सर्पस्य. ७ संकटव्याप्ता ८ कटाक्षा एव विशिखा बाणाः ९ न छिन्दन्ति. १० कोप क्रोधः स एव कृशानुरग्निस्तत्तापः ११ सपूर्णम्. १२ विकासयति.

भवति विपद्यपि महतामङ्गीकृतवस्तुनिर्वाहः ॥ ४८ ॥

दाता न दापयति दापयिता न दत्ते
यो दानदापनपरो मधुरं न वक्ति ॥
दानं च दापनमथो मधुरा च वाणी
त्रीण्यप्यमूनि खलु सत्पुरुषे वसन्ति ॥ ४९ ॥

मलयाचलगन्धेन त्विन्धनं चन्दनायते ॥
तथा सज्जनसङ्गेन दुर्जनः सज्जनायते ॥ ५० ॥

हृदयानि सतामेव कठिनानीति मे मतिः ॥
खलवाग्विशिखैस्तीक्ष्णैर्भिद्यन्ते न मनाग्[1]यतः ॥५१॥

वक्त्रे वल्गा[2]प्रकर्षः समर[3]भुवि तव प्राणरक्षाऽपि दैवा-
त्स्वेच्छाचारो नचाऽऽस्ते नहि भवति तथा भारवाहो नितान्तम् ॥
इत्युक्तोऽश्वः खरेण प्रहसितवदना मूक एवाऽवतस्थे
तस्माज्जात्या महान्तोऽधमजनविषये मौनमेवाश्रयन्ति ॥ ५२ ॥

अञ्जलिस्थानि पुष्पाणि वासयन्ति करद्वयम् ॥
अहो सुमनसां प्रीतिर्वामदक्षिणयोः समा ॥ ५३ ॥

माभूत्सज्जनयोगो यदि योगो मा पुनः स्नेहः ॥
स्नेहो यदि विरहो मा यदि विरहो जीविताऽऽशा का ॥५४॥

प्रेमैव माऽस्तु यदि चेत्पथिकेन सार्धं[4]
तेनाऽपि चेद्गुणवता न समं कदाचित् ॥
तेनाऽपि चेद्भवतु माऽस्तु कदापि भङ्गो[5]
भङ्गोऽपि चेद्भवतु वश्यमवश्यमायुः ॥ ५५ ॥

कुम्भः परिमितमम्भः पिबत्यसौ कुम्भसंभवो[6]ऽम्भोधिम् ॥
अ[7]तिरिच्यते सुजन्मा कश्चिज्जनकान्[8]निजेन च[9]रितेन ॥ ५६ ॥

तु[10]ङ्गासनास्तुङ्गतराः समर्था मनोरथान्पूरयितुं न नीचाः ॥

---

१ किंचिदपि. २ ‘लगाम’ इतिलोके. ३ सङ्ग्रामाङ्गणे ४ सह ५ वि-घातः ६ अगस्त्यः ७ अधिको भवति ८ पितुः ९ आचरणेन १० उच्चासनाः

धाराधरा एव धराधराणां निदाघदाहं शमितुं[1] न नद्यः ॥५७॥

सद्भिस्तु लीलया प्रोक्तं शिलालिखितमक्षरम् ॥
असद्भिः शपथेनापि जले लिखितमक्षरम् ॥ ५८ ॥

प्रथमवयसि दत्तं तोयमल्पं पिबन्तः
शिरसि निहितभारा नारिकेला नराणाम् ॥
उदकममृतकल्पं[2] दद्युराजीवितान्तं
नहि कृतमुपकारं साधवो विस्मरन्ति ॥ ५९ ॥

अद्याऽपि नोज्झति[3] हरः किल कालकूटं
कूर्मो बिभर्ति धरणीं खलु पृष्ठभागे ॥
अम्भोनिधिर्वहति दुःसहवाडवाऽग्नि-
मङ्गीकृतं सुकृतिनः परिपालयन्ति ॥ ६० ॥

हरेः[4] पदाहतिः[5] श्लाघ्या न श्लाघ्यं खररोहणम् ॥
स्पर्धाऽपि विदुषा युक्ता न युक्ता मूर्खमित्रता ॥ ६१ ॥

विपदि धैर्यमथाऽभ्युदये[6] क्षमा
सदसि वाक्पटुता[7] युधि विक्रमः ॥
यशसि चाऽभिरुचिर्व्यसनं श्रुतौ
प्रकृतिसिद्धमिदं[8] हि महात्मनाम् ॥ ६२ ॥

यत्र विद्वज्जनो नाऽस्ति श्लाघ्यस्तत्राऽल्पधीरपि ॥
निरस्तपादपे देशे एरण्डो ऽपि द्रुमायते[9] ॥ ६३ ॥

गोत्रस्थितिं[10] न मुञ्चति सदा सन्नतिमाश्रिताः[11]
उदन्वन्तश्च[12] सन्तश्च महासत्त्वतया[13] तथा ॥ ६४ ॥

साधोः प्रकोपितस्याऽपि मनो नाऽऽयाति विक्रियाम्[14] ॥

---

१ शमितु शमयितुमित्यर्थ 'शमयन्ति नान्ये' इति वा पाठ. २ अमृततुल्यम् ३ उज्झ उत्सर्गे. न सजति. ४ सिंहस्य अश्वस्य वा. ५ पादताडनम् ६ उदयकाले. ७ वक्तृत्वशक्तिः ८ स्वभावसिद्धम् ९ वृक्षवदाचरति. १० कुलमर्यादा पक्षे पर्वतस्थितिम् ११ सन्नमनम्. १२ समुद्राः १३ महान्तः सत्त्वाः प्राणिनो यस्मिन् पक्षे सत्त्व धैर्यम् १४ विकारम् ।

नहि तापयितुं शक्यं सागराम्भस्तृणोल्कया[1] ॥ ६५ ॥
नारिकेलसमाऽऽकारा दृश्यन्ते ऽपि हि सज्जनाः ॥
अन्ये बदरिकाऽऽकारा बहिरेव मनोहराः ॥ ६६ ॥
स्नेहच्छेदे ऽपि साधूनां गुणा नाऽऽयान्ति विक्रियाम् ॥
भङ्गेनाऽपि मृणालानामनुबन्धान्ति[2] तन्तवः ॥ ६७ ॥

घर्मार्तं न तथा सुशीतलजलैः स्नानं न मुक्ताऽऽवलि-[3]
र्न श्रीखण्डविलेपनं सुखयति प्रत्यङ्गमप्यर्पितम् ॥
प्रीत्यै सज्जनभाषितं प्रभवति प्रायो यथा चेतसि
सद्युक्त्या च पुरस्कृतं सुकृतिनामाकृष्टि मन्त्रोपमम् ॥ ६८ ॥

परोपदेशे पाण्डित्यं सर्वेषां सुकरं नृणाम् ॥
धर्मे स्वीयमनुष्ठानं कस्य चित्सुमहात्मनः ॥ ६९ ॥

उपचरितव्याः[4] सन्तो यद्यपि कथयन्ति नैकमुपदेशम् ॥
यास्तेषां स्वैरकथा[5]स्ता एव भवन्ति शास्त्राणि ॥ ७० ॥

वाञ्छा सज्जनसङ्गमे परगुणे प्रीतिर्गुरौ नम्रता
विद्यायां व्यसनं स्वयोषिति[6] रतिर्लोकापवादाद्भयम् ॥
भक्तिः शूलिनि[7] शक्तिरात्मदमने[8] संसर्गमुक्तिः खले-
ष्वेते येषु वसन्ति निर्मलगुणास्तेभ्यो नरेभ्यो नमः ॥ ७१ ॥

करे श्लाघ्यस्त्यागः[9] शिरसि गुरुपादप्रणयिता
मुखे सत्या वाणी विजयि भुजयोर्वीर्यमतुलम्[10] ॥
हृदि स्वस्था वृत्तिः श्रुतमधिगतैकव्रतफलं
विनाप्यैश्वर्येण प्रकृतिमहतां मण्डनमिदम्[11] ॥ ७२ ॥

संपत्सु महतां चित्तं भवत्युत्पलकोमलम् ॥
आपत्सु च महाशैलशिलासंघातकर्कशम्[12] ॥ ७३ ॥

---

१ 'कोलीत' इतिलोके २ संबन्ध कुर्वन्ति. ३ मुक्तासर ४ सेव्याः ५ स्वैरालापा ६ स्वस्त्रिया. ७ शंकरे. ८ मनोजये. ९ दानम्. १० निस्तुलम्. ११ भूषणम्. १२ काठिन्यम्.

यः प्रीणयेत्सुचरितैः पितरं स पुत्रो
यद्भर्तुरेव हितमिच्छति तत्कलत्रम् ॥
तन्मित्रमापदि सुखे च समक्रियं य-
देतत्त्रयं जगति पुण्यकृतो लभन्ते ॥ ७४ ॥

नम्रत्वेनोन्नमन्तः परगुणकथनैः स्वान्गुणान्ख्यापयन्तः[1]
स्वार्थान्संपादयन्तो विततबहुतराऽऽरम्भयत्नाः परार्थे ॥
क्षान्त्यैवाक्षेपरूक्षाऽक्षरमुखरमुखान्दुर्मुखान्दूषयन्तः
सन्तश्चाऽऽश्चर्यचर्या जगति बहुमताः कस्य नाऽभ्यर्चनीयाः॥७५॥

मनसि वचसि काये पुण्यपीयूषपूर्णा-[2]
स्त्रिभुवनमुपकारश्रेणिभिः प्रीणयन्तः ॥[3]
परगुणपरमाणून्पर्वतीकृत्य नित्यं
निजहृदि विकसन्तः सन्ति सन्तः कियन्तः ॥ ७६ ॥

किं तेन हेमगिरिणा रजताद्रिणा वा
यत्र श्रिताश्च तरवस्तरवस्त एव ॥
मन्यामहे मलयमेव यदाश्रयेण
कङ्कोलनिम्बकुटजा अपि चन्दनाः स्युः ॥ ७७ ॥

अतिकुपिता अपि सुजना योगेन मृदूभवन्ति न तु नीचाः ॥
हेम्नः कठिनस्याऽपि द्रवणोपायोऽस्ति न तृणानाम् ॥ ७८ ॥

पातितोपि कराघातैरुत्पतत्येव कन्दुकः ॥
प्रायेण साधुवृत्तानामस्थायिन्यो विपत्तयः ॥ ७९ ॥

छिन्नोऽपि रोहति तरुश्चन्द्रः क्षीणोऽपि वर्धते लोके ॥
इति विमृशन्तः सन्तः संतप्यन्ते न लोकेऽस्मिन् ॥८०॥

इयमुन्नतसत्त्वशालिनी-महतां काऽपि कठोरचित्तता ॥[5]
उपकृत्य भवन्ति दूरतः परतः प्रत्युपकारशङ्कया ॥ ८१ ॥

नाल्पीयसि निबध्नन्ति पदमुन्नतचेतसः ॥[6]

---

१ प्रगटयन्तः २ अमृतम्. ३ पङ्क्तिभिः ४ क्षणिकाः ५ शोभमाना ६ उदारचेतसः ।

येषां भुवनलाभेऽपि निःसीमानो मनोरथाः ॥ ८२ ॥
अहो किमपि चित्राणि चरित्राणि महात्मनाम् ॥
लक्ष्मीं तृणाय मन्यन्ते तद्[1]भरेण नमन्त्यपि ॥ ८३ ॥
आपत्स्वेव हि महतां शक्तिरभिव्[2]यज्यते न संपत्सु ॥
अगुरोस्तथा न गन्धो घ्राणेऽस्ति यथाऽग्निपतितस्य॥८४॥
वज्रादपि कठोराणि मृदूनि कुसुमादपि ॥
लोकोत्तराणां चेतांसि को हि विज्ञातुमर्हति ॥ ८५ ॥
तरुमूलादिषु निहितं जलमाविर्भवति पल्लवाऽग्रेषु ॥
नि[3]भृतं यदुपक्रियते तदपि महान्तो वहन्त्युच्चैः ॥ ८६ ॥
अचिन्त्याः पन्थानः किमपि महतामन्ध[4]करिपो-
र्यदक्ष्णोऽभूत्तेजस्तद[5]कृत कथा[6]शेषमदनम् ॥
मु[7]नेर्नेत्रादत्रेर्यदजनि पुनर्ज्योतिरहह
प्रतेने तेनेदं मदनमयमेव त्रिभुवनम् ॥ ८७ ॥
नूनं दुग्धाब्धिमन्थोत्थाविमौ सुजनदुर्जनौ ॥
किं त्विन्दोः सोदरः पूर्वः कालकूटस्य चेतरः ॥ ८८ ॥
उदयति यदि भानुः पश्चिमे दिग्विभागे
प्रचलति यदि मेरुः शीततां याति वन्हिः ॥
विकसति यदि पद्मं पर्वताऽग्रे शिलायां
न भवति पुनरुक्तं भाषितं सज्जनानाम् ॥ ८९ ॥
किमत्र चित्रं यत्सन्तः पराऽनुग्रहतत्पराः ॥
नाहि स्वदेहशैत्याय जायन्ते चन्दनद्रुमाः ॥९०॥
प्राज्ञो हि जल्पतां पुंसां श्रुत्वा वाचः शुभाऽशुभाः ॥
गुणवद्वाक्यमादत्ते हंसः क्षीरमिवाऽम्भसः ॥ ९१ ॥

---

१ लक्ष्मीभरेण. २ व्यक्ताभवति. ३ निःशलाके एकान्ते इत्यर्थः ४ शंकरस्य. ५ अकरोत्. ६ वार्तावशिष्टो मदनो यस्मिंस्तत्तथाविधम् अत्रोत्तरार्धस्थं त्रिभुवनमिति विशेष्यं योजनीयम्. ७ अत्रेः ।

रिपुः पौलस्त्यः[1] श्चरणचरितव्यो जलनिधि-
र्विजेतव्या लङ्का रणभुवि सहायाश्च कपयः ॥
तथाऽप्येको रामः सकलमवधीद्राक्षसकुलं
क्रियासिद्धिः सत्त्वे भवति महतां नोपकरणे ॥ ९२ ॥

रथस्यैकं चक्रं भुजगयमिताः सप्त तुरगा
निरालम्बो मार्गश्चरणरहितः[2] सारथिरपि ॥
रविर्यात्येवाऽन्तं प्रतिदिनमपारस्य नभसः
क्रियासिद्धिः सत्त्वे भवति महतां नोपकारणे ॥ ९३ ॥

धनुः पौष्पं[3] मौर्वी[4] मधुकरमयी[5] चञ्चलदृशां
दृशां कोणो बाणः सुहृदविजितात्मा हिमकरः ॥
तथाप्येकोऽनङ्गस्त्रिभुवनमपि व्याकुलयति
क्रियासिद्धिः सत्त्वे भवति महतां नोपकरणे ॥ ९४ ॥

अपेक्षन्ते न च स्नेहं[6] न पात्रं[7] न दशान्तरम्[8] ॥
सदालोक[9]हितासक्ता रत्नदीपा इवोत्तमाः ॥ ९५ ॥

किं मधुना किं विधुना किं सुधया[10] किं च वसुधयाऽखिलया ॥
यदि हृदयहारिचरितः पुरुषः पुनरेति नयनयोरयनम्[11] ॥ ९६ ॥

काकैः सह प्रवृद्धस्य कोकिलस्य कला[12] गिरः ॥
खलसंगेऽपि नैष्ठुर्यं कल्याणप्रकृतेः कुतः ॥ ९७ ॥

अम्बरमनूरुलङ्घ्यं वसुन्धरा साऽपि वामनैकपदा ॥
आब्धिरपि पोतलङ्घ्यः[13] सतां मनः केन तुल्यं स्यात् ॥९८॥

आपद्गतः खलु महाशयचक्रवर्ती
विस्तारयत्यकृतपूर्वमुदारभावम् ॥
कालागुरुर्दहनमध्यगतः समन्ता-

---

१ रावण. २ अनूरु. ३ पुष्पमयम्. ४ ज्या ५ भ्रमररूपा. ६ मैत्रीम् घृतादि च. ७ योग्यता भाण्ड च. ८ अवस्थान्तर सूत्रवर्त्ति च. ९ लोकाना हित तस्मिन्नासक्ता. पक्षे आलोकः प्रकाशः तदेवहितं तस्मिन्नासक्ता. १० अमृतेन. ११ स्थानम्. १२ अव्यक्तमधुराः १३ तर्पणः नौकेति यावत् ।

छोकोत्तरं परिमलं प्रकटीकरोति ॥ ९९ ॥
विश्वो[1]ऽभिरामगुणगौरवगुम्फितानां
रोपोऽपि निर्मलधियां रमणीय एव ॥
लोकप्रियैः परिमलैः परिपूरितस्य
काश्मीरजस्य[2] कटुतापि नितान्तरम्या ॥ १०० ॥
शून्ये ऽपि च गुणवत्तामातन्वानः स्वकीयगुणजालैः ॥
विवराणि मुद्रयन्द्रागूर्णायुरिव[3] सज्जनो जयति ॥ १०१ ॥
[4]प्रदानं प्रच्छन्नं गृहमुपगते संभ्रमविधि-
र्निरुत्सेको लक्ष्म्यामनभिभवगन्धाः परकथाः ॥
प्रियं कृत्वा मौनं सदसि कथनं चाऽप्युपकृतेः
श्रुतेऽत्यन्तासक्तिः पुरुषमभिजातं[5] कथयति ॥ १०२ ॥
प्रियप्राया[6] वृत्तिर्विनयमधुरो वाचि नियमः
प्रकृत्या कल्याणी मतिरनवगीतः परिचयः ॥
पुरो वा पश्चाद्वा तदिदमविपर्यासितरसं
रहस्यं साधूनामनुपधिविशुद्धं विजयते ॥ १०३ ॥
ये पापं शमयन्ति सङ्गतिभृतां ये दानशृङ्गारिणो
येषां चित्तमतीव निर्मलतरं येषां न भग्नं व्रतम् ॥
ये सर्वान्सुखयन्ति हि प्रतिदिनं ते साधवो दुर्लभा
गङ्गावद्गजगण्डवद्गगनवद्गाङ्गेयवद्गेयवत् ॥ १०४ ॥
यथा चित्तं तथा वाचो यथा वाचस्तथा क्रियाः ॥
चित्ते वाचि क्रियायां च साधूनामेकरूपता ॥ १०५ ॥
विवेकः सह संयत्या विनयो विद्यया सह ॥
प्रभुत्वं प्रश्रयोपेतं[7] चिन्हमेतन्महात्मनाम् ॥ १०६ ॥
हितेच्छुना तु कर्तव्यः सतामेव समागमः

1 सुन्दरः 2 केशरस्य. 3 'कोळीति लोके' लूता. 4 पाठ भेदत्वेन नास्य पद्यस्य पुनरुक्तिः 5 सकुलप्रसूतम् 6 आनन्दात्मिका. 7 विनयः

पोतो[1] दुस्तरवारिराशितरणे दीपोऽन्धकारागमे
निर्वाते व्यजनं मदान्धकारिणां दर्पोपशान्तौ सृणिः[2] ॥
इत्येतद्भुवि नाऽस्ति यस्य विधिना नोपायचिन्ता कृता
मन्ये दुर्जनचित्तवृत्तिहरणे धाताऽपि भग्नोद्यमः[3] ॥ ८ ॥
कर्पूरधूलीरचिताऽऽलवालैः कस्तूरिकाकुङ्कुमलिप्तदेहः ॥
सुवर्णकुम्भैः परिषिच्यमानो निजं गुणं मुञ्चति किं पलाण्डुः॥९॥
सर्पः क्रूरः खलः क्रूरः सर्पात्क्रूरतरः खलः ॥
मंत्रेण शाम्यते सर्पो न खलः शाम्यते कदा ॥ १० ॥
विषधरतोऽप्यतिविषमः खल इति न मृषा वदन्ति विद्वांसः
यदयं नकुलद्वेषी[6] सुकुलद्वेषी पुनः पिशुनः ॥ ११ ॥
सर्वास्तुम्ब्यः[7] समकटुरसास्तुम्बिवल्लीप्रसूता-
स्ताः संबद्धा अपि कतिपया दुस्तरं तारयन्ति ॥
शब्दायन्ते[8] सरसमपराः शुष्ककाष्ठे निषण्णा-
स्तन्मध्येऽन्या ज्वलितहृदयाः शोणितं[9] संवहन्ति ॥ १२॥
धातस्तात तवैव दूषणमिदं यन्नामकस्तूरिका
कान्तारान्तरचारिणां[10] तृणभुजां यन्नाभिमूले कृता ॥
यद्येवं पिशुनस्य[11] हन्त रसनामूले[12]ऽकरिष्यस्तदा
आऽऽयासेन[13] विनाऽभविष्यदतुला कीर्तिश्च निर्दोषता॥ १३॥
कस्तूरिकां तृणभुजामटवी[14]चराणां
निक्षिप्य नाभिषु चकार च तान्वधार्हान् ॥
मूढो विधिः सकलदुर्जनलोलजिह्वा-
मूले स्म निक्षिपति चेत्सकलोपकारः ॥ १४ ॥

---

१ नौका. २ अङ्कुशः ३ भग्नप्रयत्नः ४ 'आळे' इतिलोके ५कन्दर्प कान्दा इतिप्र. ६ 'मुङ्गस' इति लोके ७ तुम्बीफलानि. ८ शब्दं कुर्वन्ति. ९ रक्तम्. १० दुर्गममार्गसंचारिणाम् ११ सूचकस्य. १२ जिह्वामूले १३ प्रकृष्टेन यत्नेन १४ वनम्

